पृच्छतः प्रजपित्वा तु शोकदुःखभयादिकम् ।
कृताञ्जलिर्यस्य देवी तस्यापि नरकं किल ॥
न सङ्गतिर्नं वै सिद्धिर्विघ्नस्तस्य सदा भवेत् ।
शब्दे जाते भवेद्रोगी धूननं बहुदुःखदम् ।
हेलनात् सिद्धिहानिः स्यात्तस्माद्यत्नपरो भवेत् ॥

इति मालासंस्कारः ।

अथ होमः ।

प्रागग्रा उदगग्राश्च तिस्रो रेखा विलेखयेत् ।
तन्मध्ये च चतुःकोष्ठं शेषं कुर्याद्विधानतः ॥
त्रिकोणमादौ लिख्याथ मध्ये लज्जासमन्वितम् ।
वृत्तं ततश्च षट्कोणं कोणवस्वचतुष्टयम् ॥
गजकुम्भं वाह्यकोणे द्वारे योनिद्वयं द्वयम् ।
अष्टयोनियुतं चक्रं गजकुम्भचतुष्टयम् ॥
एवं कुण्डं स्थण्डिलं वा कृत्वा देवीं विभावयेत् ।
अग्नौ प्रपूजयेद्विष्णुं ऐशान्यां शूलधारिणम् ॥
वायव्यां चापि ब्रह्माणं नैरृत्यामिन्द्रमेव च ।
लक्ष्मीं सरस्वतीं पूर्वे द्वे त्रिकोणे प्रपूजयेत् ॥
शचीं कृष्णां चोत्तरस्यां छायां गङ्गाञ्च पश्चिमे ।
दुर्गां देवीञ्च त्रिपुटां दक्षिणस्यां प्रपूजयेत् ॥
प्रागग्रेषु यजेद्देवान् मुकुन्देश पुरन्दरान् ।
यजेद्दै चोत्तराग्रेषु ब्रह्मवैवस्वतेन्दुकान् ॥
देवीं प्रपूजयेत् पश्चात् षट्कोणेषु सदाशिव ! ।
दुर्गां काञ्चीं तथा कालीं त्रिपुरां भैरवीं तथा ॥
असितां पूजयेत् कोणे तारिणीं मोक्षदायिनीम् ।
मध्ये प्रपूजयेद्वत्स ! यथाशक्त्युपचारकैः ॥
देव्या योनिं विभाव्याथ भावयेच्च रजोयुताम् ।

पुष्पाञ्जलित्रयं दत्त्वा काष्ठं तत्र निपातयेत् ॥
ततो वह्निं समानीय कांस्यपात्रे स्थितम् शुभम्।
ओँ क्रव्यादेभ्यो हुं फट् स्वाहा इत्यनेन त्यजेद्बुधः॥
पुनर्मूलेन चानीय योनिमध्ये निधापयेत्।
योनिमुद्रां प्रदर्श्याथ मूलं तत्र जपेद्दश ॥
तत्र देवीं चिन्तयित्वा रजसा योनिमण्डलम्।
गन्धपुष्पेण संपूज्य देवीं सर्वार्थसाधिनीम् ॥

ॐ चित् पिङ्गल हन हन पच पच मथ मथ विध्वंसय विध्वंसय मम दुष्टान् पापान् सत्त्वान् शत्रून् ग्रस ग्रस पिब पिब अनेन होमेन सर्वाज्ञां ज्ञापय मम सर्वकार्य्याणि साधय स्वाहा इति पठित्वा वह्निं ध्यापयेत्।

रजोगुणसमुद्भूतं रक्तवर्णं त्रिलोचनम्।
द्विभुजं सर्वपापघ्नं समिद्धं विश्वतोमुखम्॥
नानालङ्कारसंयुक्तं बहुजिह्वासमन्वितम्॥

एवं ध्यात्वा अग्ने त्वं वरदनामासि इति नाम कृत्वा वरदनामाग्ने इहागच्छ इह तिष्ठ तिष्ठ मम सर्वकर्म्माणि साधय स्वाहा। इत्यावाहयेत्। ततो मूलेन नमस्कुर्य्यात्। एवं आज्यस्यापि स्रुवस्य च। आज्यपात्रस्य दक्षिणभागादाज्यं गृहीत्वा मूलेन अग्नेर्दक्षिणनेत्रे जुहुयात्। तथा वामभागादाज्यं गृहीत्वा वामनेत्रे। मध्यतो मध्यनेत्रे। ततो महाव्याहृतिभिः ओँ भूः स्वाहा। ओँ भुवः स्वाहा। ओँ स्वः स्वाहा। ओँ भूर्भुवःस्वः स्वाहा। इति स्त्रीशूद्रयोर्विना। ततो मूलेन एकादशाहुतिं हुत्वा श्रीतारादेव्याः पीठदेवताभ्यः स्वाहा। ततः अङ्गेभ्यश्चरूपये। ततः काम्यकर्म चेत् सङ्कल्पा नित्यञ्चेत् तथा। त्रिमध्वक्तेन प्रशस्तहोमं समाप्य स्त्रीशूद्रेतरो महाव्याहृतिभिर्हुत्वा आवरणदेवताभ्यः अष्टाहुती-

हुत्वा वह्निं गन्धपुष्पमाल्यताम्बूलैरभ्यर्च्य श्रीसदाशिवं पूर्व-
स्रुवाहुतित्रयं दत्त्वा मूलेन पूर्णाहुतिं दत्त्वा वह्निं प्रदक्षिणी-
कृत्य प्रणम्य काम्यदक्षिणादिः। तिलकन्तु मूलेन संहार-
मुद्रया क्षमस्वेति विसर्जयेत्। इति होमः॥

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा सारदा
तारावाक्यमनुस्मरन् प्रियतमं वामावचः कारणम्।
ब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे
दीक्षायः पटलो द्वितीय इति संसिद्धिप्रदः सत्वरम्॥

---

## अथ तृतीयः पटलः।

अथ मन्त्रविस्मरणप्रायश्चित्तम्।

तारानिगमे तारार्णवे च। अन्यासां व्यवस्था भवेत्।
कालीतारासु विद्यासु यदि स्यान्मन्त्रविभ्रमः।
तारापूजां ततः कृत्वा चैकलिङ्गे शिवालये॥
कुशासनस्थितो वीरो जपेत् पद्मावतीमनुम्।
एकादशसहस्राणि ततो मन्त्रस्मृतिर्भवेत्॥
कालीतारासु विद्यासु चक्रचिन्ता न विद्यते।
अरिदोषादिदोषाद्यैर्न लोको लिप्यते क्वचित्॥
यदि भाग्यवशाद्देवि। तारामन्त्रं प्रलभ्यते।
ऋणिधन्यादिकं चक्रं न च तत्र परीक्षयेत्॥
ताराविद्याचक्रमध्ये न कदाचिद्दलो भवेत्।
महाचीनक्रमं प्राप्य सर्वस्यैव ऋणी भवेत्॥
तस्माद्देव्याश्च तारायाः प्राणान्तेऽपि च साधकः।
साधने पूजने वापि महाचीनं त्यजेन्न च॥
महाचीनं महानीलं न साधयति यो नरः।

न तस्य साधने शक्तिः कुम्भीपाके मज्जीयते ॥
वामाचारं परित्यज्य पूजनं वा जपं चरेत्।
स गच्छेन्नरकं घोरं यावदिन्द्राश्चतुर्दश ॥
वामाचारं विना देवि ! तारायाः परिपूजनम्।
शोकाय मरणायेह परे च नरकाय च ॥
न पूजा न जपो यस्य न सन्ध्या न च तर्पणम्।
महाचीनक्रमं कृत्वा स गच्छेत्तारकापदम् ॥
पञ्चतत्त्वं विना देवि ! ब्राह्मणः शूद्रतामियात्।
पञ्चतत्त्वयुतो देवि ! शूद्रोऽपि विप्रतां व्रजेत् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवान्त्यजास्तथा।
महाचीनक्रमं कृत्वा शिवः साक्षाद्भवेत् स्वयम् ॥
कौलं दृष्ट्वा यदा कौलस्तस्य पूजां न कारयेत्।
चक्रे स्थित्वाथवा मन्त्री लतायोगं समाचरेत् ॥
मध्ये चक्रे स्थितः कौलः शक्तिश्च. साधकाय च।
दातुं नैव मनश्चक्रे स्वयं नेतुं प्रवर्त्तते ॥
अथवा दिवसं प्राप्य कुलपूजां चरेन्न च।
साधकानपि शक्तिश्च स्वेच्छाचारैर्न तोषयेत् ॥
प्रसन्नमनसा चापि सत्कौलाय प्रदीयते।
स्वयं स्वीयकुलैः सार्द्धं क्रियते च कुलक्रिया ॥
तस्य यन्त्रञ्च माला च पूजापद्धतिरेव च।
धारितं कवचं तस्य क्षीयते योगिनीगणैः ॥
वह्निना दह्यते वापि जले वापि प्रलीयते।
चौरैर्वा नीयते किञ्चित् किञ्चिद्वा योगिनीगणैः ॥
एवञ्चेज्जायते यक्ष ! यन्त्रादिहरणं शिव ! ।
पञ्च कौलान् समानीय कुमारीश्च दिग्र्यंयतः ॥
गन्धाद्यतैश्च संपूज्य वन्दयेच्छिरसा ततः।

होमं कुर्य्यात् सहस्रन्तु चक्रमध्ये सुसाधकः ॥
अष्टोत्तरशतं कुर्य्यात्तर्पणं साधकोत्तमः ।
दर्शमीनासवेनापि सर्वदोषैर्न लिप्यते ॥
यन्त्रादिनाशे चैतत्तु प्रायश्चित्तं शिवोदितः ।
प्रजपेद्वर्णमालाभिरष्टोत्तरशतं मतम् ॥

अथ पञ्चतत्त्वसंस्कारः ।

साधारणगृहे वापि कामाख्यावदने जनः ।
सर्वं शृङ्गारवेशश्च कुर्य्यात् साधकसत्तमः ॥
सिन्दूरं कुङ्कुमं वापि धारणं कुलचन्दनम् ।
वामभागकृता शक्तिः सर्वाभरणशोभना ॥
गन्धपुष्पाक्षतैस्तान्तु पूजयित्वा तु साधकः ।
षट्कोणं विन्दुसंयुतं वृत्तञ्चापि त्रिकोणकम् ॥
पुनर्वृत्तं चतुष्कोणं कुङ्कुमेन विलेखयेत् ।
रक्तचन्दनसंलिप्तं रक्तवस्त्रेण वेष्टयेत् ॥
मूलमन्त्रेण संप्रोक्ष्य योनिमुद्रां प्रदर्शयेत् ।
देवतां भावयेत्तत्र परमानन्दरूपिणीम् ॥
प्रणमेत् पञ्चमुद्राभिः कारणाधारमुत्तमम् ।
ह्रीं नमो योनिमुद्रादौ चं नमश्च कृताञ्जलौ ॥
घ्रूं नमः कुलमुद्रायां ग्लौं नमो मत्स्यरूपके ।
ह्रौं नमः सपुटाकारे पञ्च मुद्राः समीरिताः ॥
प्रोक्षयेन्मूलमन्त्रेण धूपयेत्तेन कारणम् ।
गन्धपुष्पं ततो दत्त्वा प्राणायामं समाचरेत् ॥
ऋष्यादिन्यासं कृत्वा तु कराङ्गञ्च षडङ्गकम् ।
वर्णन्यासं ततः कृत्वा पञ्चमुद्राः प्रदर्शयेत् ॥
धेनुं योनिञ्च मत्स्यञ्च शङ्खं खड्गमतःपरम् ।
हस्तं दत्त्वा ततः पात्रे पठेन्मन्त्रमनुत्तमम् ॥

ॐ एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्॥
ॐ सूर्य्यमण्डलसम्भूते! वरुणालयसम्भवे!।
अमावीजमयि! देवि! शुक्रशापाद्विमुच्यताम्॥
ॐ देवानां प्रणवो वीजं ब्रह्मानन्दमयं यदि।
तेन सत्येन देवेशि! ब्रह्महत्यां व्यपोहतु॥

ॐ वां वीं वूं वैं वौं वः ब्रह्मशापाद्विमोचितायै सुधादेव्यै नमः। इति दशधा जपेत्।

ककारो रेफसंयुक्तः षड्दीर्घश्चन्द्रसंयुतः।

क्रीं क्रीं क्रूं क्रैं क्रौं क्रः। सुधादेव्याः कृष्णशापं मोचय मोचय अमृतं स्रावय स्रावय स्वाहा। इति दशधा जपेत्॥ ॐ छां छीं छूं छैं छौं छः छुरिका भवशोभिनि सर्वपशुजनमनश्चक्षुरिन्द्रियाणि स्तम्भय स्तम्भय नाशय नाशय घातय घातय इति त्रिः॥ ॐ परमस्वामिनि! परमाकाशशून्यवाहिनि! चन्द्रसूर्य्याग्निभक्षिणि! पात्रं विश विश स्वाहा। इति त्रिः।

तन्मध्ये भावयेद्देवीममृतानन्दरूपिणीम्।
सूर्य्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम्॥
रक्तवस्त्रपरीधानां सर्वालङ्कारभूषिताम्।
रत्नकेयूराङ्गदाद्यैः शोभितां सर्व्वरूपिणीम्॥ इति ध्यानम्।
विधातव्यं सुधामध्ये साधनञ्च सुसाधकैः।
पूजयेद्विल्वपत्राद्यैरमृतानन्दनन्दिनीम्॥
तन्मध्ये भावयेद्देवं भैरवं भैरवीप्रियम्।
अमृतार्णवमध्यस्थं पञ्चवक्त्रं त्रिलोचनम्॥
वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्।
अष्टादशभुजैर्युक्तं गदामुषलधारिणम्॥

महामहेति विख्याते मीन तारापिय सदा ॥

ओं ह्रीं क्रौं ओं वू स स स इमं मीनं शोधय शोधय स्वाहा ॥ इति मीनशुद्धिः ।

योनिमुद्रा ततो बद्धा दृष्ट्वा च योनिमुद्रिकाम् ।
पठेदिमं मनुं वत्स ! सर्वकर्मसुसिद्धये ॥
योनिविद्यां महाविद्यां कामाख्या कामदायिनीम् ।
कामसिद्धिप्रदां देवीं कामबीजादिका पराम् ॥
ओं क्लीं कामेश्वरि । महामाये क्लीं कालिकायै नमः ॥
ओं योनिविद्यां महाविद्यां चतुर्वर्गप्रदायिनीम् ॥
कालाकलासु विख्यातं तारानामतरोमते ॥
ओं चौं वू ड्रीं ह्रः
योनिविद्ये योनिसिद्धे योनिकारणकारिके ।।
कामदाकामदा श्रेया तस्समध्ये महामहा ॥

ओं औं बाले बाले त्रिपुरसुन्दरि योनिरूपे । मम सर्वं सिद्धिं देहि देहि योनिमुद्रां कुरु कुरु स्वाहा । इति मुद्राशुद्धिः ।

ततः शक्तिशोधनम् । ओं ऐं क्लीं त्रिपुरदेवि ! सर्वशक्तिके । शिवत्वं देहि देहि ओं ओं इति तस्याः शीर्षे दशधा जप्त्वा तस्या देहे मातृकान्यासं कृत्वा षड्यादिन्यासं कराङ्गन्यासौ च विन्य सेत् । मूलं तद्धृदये शतं जपेत् । इति शक्तिसंस्कारः ।

मूलं चोक्ता स्ववामे तु त्रिकोणं विलिखेद् बुधः ।
तत्र मध्ये लिखेत्सम्यक् कामतत्त्वस्वरूपिणीम् ॥
तत्र पूजा विधातव्या गन्धपुष्पाक्षतैरपि ।
साधकोवापशक्तीय प्रणम्य च पुनः पुनः ॥
लज्जापूर्वं जलं दत्त्वा चाज्ञां नीत्वा तु साधकात् ।
तर्पयामीति चोक्ता तु तर्पयन् समानयन् ॥

वामहस्तानामिकयाप्यङ्गुष्ठयोगमाश्रयेत् ॥

ह स च म ल व र यूं आनन्दभैरवों तर्पयामि स्वाहा इति षडयुक्तामवेन ब्रह्मरन्ध्रे विस्तर्पयेत्। एवं गुरुं परमगुरुं परापरगुरुं परमेष्ठिगुरुं ह स च म ल व र यूं आनन्दभैरवं स्वाहा इति त्रिः। ततो हृदये तद्रूपेण मूलमुच्चार्य्य भोमामिकजटां परमपददात्रीं तारादेवीं तर्पयामि स्वाहा। एवं ...त्र देवीविषये। तथाच तारानिगमे—

तर्पयेत्तु यदा तारां तर्पयेत् कालिकां पराम्।
तर्पयेत् षोडशीं देवीं ह्यन्यथा निष्फला क्रिया ॥
यत्ते काली परा प्रोक्ता सा तारा परिकीर्त्तिता।
सैव श्रीषोडशी देवी महात्रिपुरसुन्दरी ॥
अभेदं भावयेद्यस्तु स एव श्रीसदाशिवः।
अन्यथा भावयेद्यस्तु स मूढोऽभूत्महेश्वर ! ॥
स्वर्गे मर्त्ये च पाताले यः पादयुगमाश्रयेत्।
स भवेत् कल्पवृक्षस्य महामोक्षानुकूलकः ॥

यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः।
श्रीसुन्दरीतर्पणतत्पराणां
भोगश्च मोक्षश्च करस्थ एव ॥

ततः स्वदक्षिणकरतले त्रिकोणं विलिख्य शुद्धियुक्तासवं त्रिकोणमध्ये संस्थाप्य लज्जाबीजं दशधा जप्त्वा ग्रीं ह्रीं ह्रौं ह्रां ह्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः। बीजतत्त्वम् अध.कोशस्थपरमतत्त्वेन शोधयामि स्वाहा। इति शुद्धिखण्डं वामहस्ते नीत्वा गृह्णीयात्। वामखण्डं नीत्वा ग्रीं ह्रीं ह्रौं ह्रां ह्रीं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं वामतत्त्वस्थपरमतत्त्वेन शोधयामि स्वाहा।

इति पूर्ववत्। ततो दक्षिणखण्डं नीत्वा श्रीं क्रीं ह्रौं ह्रां ह्रीं ट ध न प फ ब भ म य र ल व श ष स इत्यकोणखतत्त्वेन शक्तितत्त्वं शोधयामि स्वाहा। इति पूर्ववत्। ततो मध्यखण्डं नीत्वा श्रीं क्रीं ह्रौं ह्रां ह्रीं लं चं मायातत्त्वेन मायातत्त्वं शोधयामि स्वाहा। इति पूर्ववत्। ततश्च साधकेभ्यः शक्तिभ्यश्च पात्रं शुद्धिञ्च दद्यात्। सर्वे यथाविधि कर्म कुर्वन्ति। ततः कुण्डलिनीमुखे पात्रं गृहीतव्यम्।

पात्रोपरि जपेन्मन्त्रं सप्तधा साधकोत्तमः।
गुरुं स्मृत्वा पिबेन्मद्यं सर्वकामार्थसिद्धिदम्॥

ततः कुण्डलिनीमुखे मन्त्रपूर्वकं जुहुयात्। प्रथमपात्रं नीत्वा द्वितीयपात्रे शक्त्युच्छिष्टं नीत्वा च पिबेत्। तथाच—

शक्त्युच्छिष्टं पिबेन्मद्यं वीरोच्छिष्टन्तु चर्वणम्।
वीरोच्छिष्टात् पृथक् पाने पशुपानं प्रकीर्त्तितम्॥
निन्दाश्रुतिः साधकानां हिंसाज्ञानं कुले यतः।
निन्दा वा शक्तिकौलानां साधकानां न पूजनम्॥
अनिच्छया शक्तियोगं चक्रे वापि च मैथुनम्।
कामतः शक्तियोगं वा न ध्यानं दैवतेन वा॥
जपहोमविहीनं यद्भक्तिहीनं कुलार्चनम्।
प्रकटं साधकानाञ्च असन्तुष्टश्च साधकः॥
एवं धर्मयुतः कौलो भ्रष्टः कौलः प्रकीर्त्तितः।
पञ्चमं पुरतः कृत्वा चतुर्थे जपमाचरेत्।
जपपूजां विना पानं पशुपानं प्रकीर्त्तितम्॥

अथ शापबन्धनमन्त्राः।

ओमङ्करवशेखरमविलसच्चन्द्रामृतप्लावितं
क्षेत्राधिष्ठितयोगिभिर्जनगणैः सिद्धैः समाराधितम्।

आनन्दार्णवकं महात्मकमिदं साक्षात्त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥
हैमं शीलकलान्वितं सुमहिमायोगं महामांसकं
शिखिवेलविचक्षणं रविवरच्छायाप्रदं शाश्वतम् ।
आनन्दादिमहार्णवे विगलितं ज्ञानं महामोचदं
वन्दे पात्रमहं द्वितीयमधुना स्वात्मावबोधप्रदम् ॥
महापद्मे करे पद्मे योनिमालोकयन् धिया ।
दग्धमीनसमोपेतं वन्दे पात्रं तृतीयकम् ॥
मुद्रारूपां योनिमुद्रां सिद्धिदां सिद्धिरूपिणीम् ।
भजामि परया भक्त्या चतुर्थं पात्रयाम्यहम् ॥
योनिना लिङ्गमाप्रोतं पञ्चमं परिकीर्त्तितम् ।
तत्पूर्तिनामतस्तेन कल्पयामीह पञ्चमम् ॥
सदानन्दप्रदं द्रव्यं महानन्दप्रदायकम् ।
गुरुपादगते दाने षष्ठं पात्रं नमाम्यहम् ॥
समुद्रमासम्भूतं समुद्रवारिजं शुभम् ।
समुद्रे निगमे पात्रे गृह्णामि सप्तमीं सुधाम् ॥
अष्टदुर्गा शक्तिरूपा महिषासुरनाशिनी ।
पुनाति सा जगद्धात्री नवमे शङ्करप्रिया ॥
महाविद्या दश प्रोक्ता महासिद्धिप्रदायिनी ।
महामोहविनाशाय मोहिनी दशमे करे ॥
एकादश महारुद्रा वसुसिद्धिप्रदायकाः ।
वसु पष्टिसिद्धिदांस्तान् वन्दे चैकादशे करे ॥
द्वादशे द्वादशादित्याः सदा तर्पणतत्पराः ।
तामसैश्वर्यरूपेण द्वादशं वन्दयाम्यहम् ॥
त्रयोदशे महाविद्या शारदा परिभूयते ।
तासां सिद्धिप्रदा देवी वन्दे पात्रत्रयोदशे ।

इति त्रयोदशपात्रवन्दनं सदा सुखप्रदम्। अन्यद् यत्प्रकारान्तरं पात्रवन्दनं ग्रन्थान्तरे दृश्यते तत् कालीतारासुन्दरीत्रिपुरेतरविषयम्।

यावन्न चलते चक्षुर्यावन्न चलते मनः।
तावत् पानं प्रकर्त्तव्यं मन्त्रसिद्धिप्रदायकम्॥
पीत्वा पीत्वा पुनः पीत्वा पुनः पतति भूतले।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते॥

अथ तारानिगमोक्तकेवल श्रीताराविषये सर्वपात्रवन्दनमन्त्रयैकत्रैव। ॐ नाहं कर्त्ता कारयिता न च मे कार्य्यं नाहं भोक्ता भोजयिता वा न च भोज्यम्। अहं चिदात्मा स्वयमेव तेजः स्वयं गुरुर्विष्णुरहं सरूपः॥ नान्यं स्मरेत्र च भजेत् परिहाय चाद्यां नान्यो तपो न च गतिः परिहाय चाद्याम्। इति पाने सर्वत्र शुद्धियुक्तेन। प्रथमं यथाशक्ति पिबेत्। ततः पञ्चतत्त्वक्रमः। प्रथमं वामहस्ते त्रिकोणाकारपानमुद्रया द्रव्यं नीत्वा दक्षिणहस्ते शुद्धिं नीत्वा मूलमुच्चार्य्य इदं शुद्धियुक्तासवं श्रीमत्तारा एकजटामहादेव्यै नमः। सर्वत्र शुद्धिसंस्कारे मूलमन्त्रजपः। वामहस्ते मांसं धृत्वा मूलं सकृधा सम्रा एषा मांसशुद्धिः श्रीमत्तारा एकजटादेव्यै नमः। ततो मीनं वामहस्ते नीत्वा एषा मीनशुद्धिः श्रीमत्तारा एकजटादेव्यै नमः। ततः शक्तिलिङ्गमुद्रां प्रदर्श्य एषा शक्तिः श्रीमत्तारा एकजटादेवी महानन्दकल्पनाय रस रस चव्य चव्य प्रमोद प्रमोद यस्या योनौ मम सिद्धिं देहि देहि ॐ ॐ ॐ स्वाहा इति निवेद्य यथायोग्यमानन्दं कृत्वा चक्रादितरस्थाने शक्तिं नीत्वा स्वपुरतः पुरोमुखों संस्थाप्य तदुपरि बिन्दुविनिक्षेप कृत्वा योनिलिङ्गमुद्रां प्रदर्श्य चक्षोदितयेत् कर्णे ब्रह्माचीजमुद्रां कृताञ्जलिः।

शक्तिरूपे ! महादेवि ! योनिसिद्धिस्वरूपिणि ! ।
प्रसीद जगतां सृष्टिकारिणि ! ब्रह्मरूपिणि ! ॥
योनिरूपा महाविद्या योनिसिद्धिप्रदायिनी ।
सृष्टिः प्रजायते यस्मात् पुत्रत्वेनापि पाल्यते ॥
पुन. प्रलीयते योनौ सृष्टिस्थितिलयालये ।
साधयामि महामन्त्रं तेन सिद्धिं विधेहि मे ॥

ॐ ह्रौं स्त्रीं क्लीं कामेश्वरि महात्रिपुरे त्रिपुरालये ! ममैव सिद्धिं देहि देहि स्वाहा इति पठित्वा लिङ्गे शापमन्त्रं सप्तधा जप्ता दिगम्बरी भूत्वा तां दिगम्बरीं कृत्वा पद्मं दृष्ट्वा तत बिम्बं रविबिम्बं चामरं सकरोत्थापि शिखरं तथा नाभौ शतं जपेत् ।

योनिमध्ये शतं जप्ता प्रवेशं कारयेद्बुधः ।
महायोनिमयीं देवीं पार्वतीं परिभावयेत् ॥
स्वयं शिवस्वरूपः स्याद् आत्मानं शिवरूपिणम् ।
भावयित्वा निर्विकारं स्वयम् आद्यं विघातयेत् ॥
साधको भावयेद्यस्तु कामुको वा प्रजायते ।
पच्यते नरके घोरे न मोक्षः कोटिजन्मतः ॥
तस्मात् सर्वप्रयत्नेन निर्विकारो भवेत् स्वयम् ।
अन्यथा सिद्धिहानिः स्यात् पतते नरके स्वयम् ॥
ओं नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ।
ज्ञान प्रदीप्यते नित्यमक्षवृत्तिर्जुहोम्यहम् ॥
ओं धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ इति त्यजेत् ।
ततस्तत्रासने स्थित्वा सहस्रं जपेत् । ततः पात्र प्रक्षाल्य
ऊर्द्ध्वं च जलो मायाबीजं विलिख्य तज्जलेन सदा
ओं यं यं स्रुगाग्नि पादेन यो मां पश्यति चक्षुषा ।

स एव दासतां याति यदि शक्रसमो भवेत् ॥

इति ललाटे टीकां नीत्वा विहरेत्। द्रव्यं वारवारि तोलकमितं पात्रे सदावेशयेत्।

साधकेभ्यय शक्तिभ्यो दत्त्वा पात्रं समानयेत्।
साधयेत्त्रिविधैर्भावैर्दिव्यवीरपशुक्रमैः ॥
दिव्यास्तु देववत्प्रायाः सदाचारपरायणाः।
ऋणाधानं तथा पाल्यं हिंसाश्चैव विशेषतः ॥
स्नानं सन्ध्याञ्च पूजाञ्च दिवा कुर्य्याच्चयं त्रयम्।
परस्त्रीमाहरेद्दोष्यापरं पुत्त्रवदिष्यते।
सदा सत्त्वगुणं स्मृत्वा ब्रह्मचारी भवेत् ध्रुवम् ॥
योषावक्त्रं कुचौ वापि ऊरुञ्च साधकोत्तमः।
दृष्ट्वा मन्त्रं जपेल्लक्षं द्वादशस्वर्णमुत्सृजेत् ॥
तर्पयेत् सुधया देवीं तारां तारकदायिनीम्।
साचादिन्द्रो भवेत् सोऽपि यदि योषां न च स्पृशेत्।
योषास्पर्शनमात्रेण दिव्यभावो वृथा भवेत्।
यावत्तपस्या कर्त्तव्या तावद्योषां विवर्जयेत् ॥
मत्स्यं मांसं तथा तैलं स्त्रिग्धान्नं मोदकं तथा।
स्त्रीमुद्रा नैव द्रष्टव्यौ चान्यथा पतनं भवेत्।
जाते सिद्धे च तपसि ऋतुकाले व्रजेत् स्त्रियम्।
पञ्चपर्वं वर्जयित्वा नचेद्भ्रष्टो भविष्यति ॥

अत्रायं संक्षेपः भावसारावल्यां व्याख्यातो वीराचारोऽपि संक्षेपतः कामाख्यामूले व्याख्यातः पश्वाचारस्तु।

चितौ वा कामिनीं वापि शवं वा न च साधयेत्।
कालीतारासु विद्यासु नैवान्तर्यजनञ्चरेत् ॥
पीठस्थानं भावयेन्न परयोषां न दर्शयेत्।
वीरभावकुलो दिव्यस्तस्माद्दिव्यं प्रशस्यते ॥

अशक्तश्चाङ्गवेदीशो न पशुश्च कलौ क्वचित् ।
येन तेन प्रकारेण पशुभावं विवर्जयेत् ॥
स्वेच्छा यत्र यत्र चास्ति का सिद्धिस्तेन भारते ॥

अथ तारानिगमोक्तश्लोकमेकं शान्तिस्तोत्रम् ।

श्रीं पाहि त्वं करुणामयि ! प्रियतमं सत्साधकं रक्ष मां
भ्रष्टाचारश्च नाशय प्रियतमाबक्त्रारविन्दं मम ।
नित्यं देहि सुधासुधाचयमयीं सिद्धिं शिवे ! सिद्धिदम् !
ज्ञानं मोक्षविधायकं कुरु शिवे ! संहारिणि ! पार्वति ॥
शान्तिस्तोत्रं पठित्वा तु यथेच्छं विहरेन्नरः ।
चक्रमध्ये भवेद्‌या सा वक्तव्या न च कुत्रचित् ॥
कथा प्रातर्भवेत् सापि नाशाय नरकाय च ।
चक्राकारं चरेच्चक्रं पंक्त्याकारमथापि वा ॥
प्रविष्टे भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः ।
निवृत्ते भैरवीचक्रे तथा सर्वे पृथक् पृथक् ॥
गन्तुं चक्रात् समायातं नत्वा नत्वा पुनः पुनः ।
अन्यथा मरणं तस्य गतिः स्याद्यमसादने ॥
अन्यचक्रस्य दूरस्थं स्वचक्रं वा सकृत् व्रजन् ।
स भवेत्तारकापुत्रो वसुसिद्धीश्वरो भवेत् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
लक्षं वापि तड़ागानां चक्रं दृष्ट्वा लभेत् फलम् ॥
यो ददाति महादेव ! शक्तिभ्यः साधकाय च ।
कलामात्रेण देवेषु कोट्यश्वमेधजं फलम् ॥
उपवासं भगौः पातं सन्ध्या सव्रतधारणम् ।
तीर्थपर्य्यटनञ्चैव कौलः पञ्च विवर्जयेत् ॥
महापीठं व्रजेन्नित्यं नचेत् पीठमनुत्तमम् ।
तारापुरं महापीठं गन्तव्यं यत्नतः सदा ॥

लक्षत्रयजपाद्देवि ! सर्वसिद्धीश्वरो भवेत् ॥
ईशाने चक्रनाथस्य वैद्यनाथस्य पूर्वतः ।
तारापुरमिदं ख्यातं नगरं भुवि दुर्लभम् ।
तत्र यत्नेन गन्तव्यं यत्र ताराशिवालयम् ॥ इति संक्षेपः ॥

इति श्रीब्रह्मानन्दपरमहंसपरिव्राजकावधूतविरचिते
तारारहस्ये तृतीयपटले तत्त्वादिरहस्यम् ।

---

अथ पूजा । तथाच तारानिगमे तारासारे च ।
आदौ जलश्च संशोध्य क्षालनं हस्तपादयोः ।
मूलेन तिलकं कुर्य्याद्विभूत्या तु त्रिपुण्ड्रकम् ॥
रक्तचन्दनटीकां वा सिन्दूरस्यापि वा पुनः ॥

ओं मणिधरि ! वज्रिणि ! सर्ववशङ्करि ! हुं फट् स्वाहा । इत्यनेन शिखां बद्धा ओं ह्रीं स्वाहेति आचमनम् । गुरुः प्रथमं पूजागृहद्वारमागत्य ओं वज्रोदके हुं फट् स्वाहा इति जलमधिष्ठाय । ओं विशुद्धधर्माय विसर्वपापानि शमयाशेषविकल्पमपनोय हुं फट् स्वाहा । इति हस्तौ पादौ च प्रक्षाल्य । मूलेन तिलकं विभूत्या त्रिपुण्ड्रं सिन्दूरगोरोचनान्यतमटीकां गृहीत्वा । ओं मणिधरि । वज्रिणि ! सर्ववशङ्करि ! हुं फट् स्वाहा इति शिखां बद्धा ओं ह्रीं स्वाहा इत्याचम्य ।

ततः पीठं चिन्तयेच्च कृताञ्जलिपरो भवेत् ।
आचमनं ततः कृत्वा सर्वसिद्धीश्वरो भवेत् ।
भैरोचनादीन् विन्यस्य भूमिं संशोधयेत्ततः ॥
ततश्च भूमिं संशोध्य आसनाधस्त्रिकोणकम् ।
संशोध्य आसनं पश्चात् सर्वविघ्नान् विनाशयेत् ॥

ततः प्रयोगः ।

प्रयसत्तं तत्र संलिख्य तत्र अलद्दुलं करेत् ।

तन्मध्ये मणिपीठञ्च नानामणिविभूषितम्॥
नानालङ्कारसंयुक्तं मणिदेवैर्विभूषितम्।
शिवाभिर्बहुमांसास्थिमोदमानं समन्ततः॥
चतुर्दिक्षु शिवामुण्डचिताङ्गारास्थिसंयुतम्।
तन्मध्ये भावयेद्देवीं यथोक्तध्यानयोगतः॥

ततस्ताराचमनं श्रीं उग्रतारायै स्वाहा। श्रीं एकजटायै स्वाहा। श्रीं नीलसरस्वत्यै स्वाहा। इत्याचम्य। श्रीं ह्रीं स्वाहा इति करौ संशोध्य वधूबीजेन कूर्चेन चोष्ठौ परिशोधयेत्। पुनरस्त्रेण हस्तौ क्षालयेत्। मुखे श्रीं वैरोचनाय नमः। नासायां श्रीं शङ्खपाण्डराय नमः। श्रीं पद्मनाभाय नमः। चक्षुषोः श्रीं असिताङ्गाय नमः। श्रीं मामकाय नमः। कर्णयोः श्रीं मामकाय नमः। श्रीं पाण्डवाय नमः। श्रीं तारकाय नमः। हृदि श्रीं पद्मान्तकाय नमः। शिरसि श्रीं यमान्तकाय नमः। वामबाहौ श्रीं विघ्नान्तकाय नमः। दक्षबाहौ श्रीं नरान्तकाय नमः। इति ताराचमनम्। श्रीं पवित्रे! भूमि! हुं फट् स्वाहा। इति योनिमुद्रया भूमिमभिमन्त्र्य। श्रीं रक्ष रक्ष मां हुं फट् स्वाहा इति जलसेकाद्भूमिं संशोध्य। ततः आसनाधस्त्रिकोणं विलिख्य श्रीं आः सुरेखे! वज्ररेखे! हुं फट् स्वाहा इत्यासनमभ्यर्च्य श्रीं ह्रीं आधारशक्तिकमलासनाय नमः। इत्यासनमभ्यर्च्य श्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा इत्यासनमभ्यर्च्य। आसनं तारार्णवे।

कोमलं विष्टरं चापि चूडकं मृदुकं तथा।
अष्टमासान्तगर्भस्य पतनं मृदु चोच्यते॥
चतुर्वर्षान्तरालस्य चूडकश्च विधीयते॥

पञ्चाग्रसकुशयवनिर्मितं मत्स्यपालुकाभिः शोधितं मार्जितमिति।

ततश्चाण्डालिनीगर्भजातश्च ब्राह्मणीरमात् ।
ब्राह्मणीगर्भजातं वा चण्डालस्यापि चौरसात् ।
कमलासनमित्युक्तं मन्त्रसिद्धिप्रदायकम् ॥
इत्यादि कमलासनं संशोध्य । श्रीं
स्वाहा इति पुष्पाचतद्वैर्विघ्नानुत्सारयेत् ।
खेचरान् वामपादघाततयेण भौमान् ।
गणेशादीन् प्रणम्याथ दशदिग्बन्धनञ्चरेत् ।
करौ च गन्धपुष्पाभ्यां शोधयेत्तदनन्तरम् ॥
फडिति गन्धपुष्पाभ्यां करौ
काभिर्दशदिग्बन्धनञ्चरेत् । वस्त्रे ग्रन्थिं
शोधयेत् ।
पुष्पञ्च शोधयित्वा तु भूतशुद्धिं
तत कर्त्तारमाराध्य मूलं
एकादश प्रजप्तव्य: प्रतिष्ठामनुरेव च
मातृकान्यासकं कृत्वा मातृकाया:
कराङ्गं मातृकायाश्च
प्राणायामं तत:
श्रीं मणिधरि ! वज्रिणि !
स्वाहा । इति कायवाक्चित्तं
हेते शताय सम्यक् सम्पदाय । श्रीं
पुष्पसम्भवे ॥ पुष्पचयावकीर्णे हुं फट्.
शुद्धिं कुर्यात् । स्वाङ्गे उत्तानौ
लिनीं जीवात्मानं स्वानि
स्थितपरमात्मनि शिवे संयोज्य
तदुद्भूतेनाग्निना लिङ्गशरीरं संदह्य
तदुद्भूतेन वायुना भस्म

शिरसि विचिन्त्य तदुद्भूतेनामृतेन तदस्थि प्लावितं कृत्वा तस्मिन् विश्वव्यापके वारिणि आःकाराद्रक्तपङ्कजं तदुपरि टोंकारात् श्वेतपङ्कजं तदुपरि हूंकारं नीलसन्निभं तदुपरि स्त्रीं वीजभूषितां मातृकां ध्यायेत्।

श्रीं प्रत्यालीढ़पदां घोरां मुण्डमालाविभूषिताम्।
खड्गकर्त्रीसमायोगी सव्येतरभुजद्वयाम्॥
कपालोत्पलसंयुक्तसव्यपाणियुगान्विताम्।
पिङ्गोग्रैकजटां ध्यायेन्मौलावक्षोभ्यभूषिताम्॥
अक्षोभ्यो हरमूर्द्धन्यस्त्रिमूर्त्तिर्नागरूपधृक्॥
चन्द्रसूर्य्याग्निनयनां महापातप्रमत्तिकाम्।

इति ध्यात्वा स्वशिरसि पुष्पं दत्वान्तर्यजनप्रकारेण मानसोपचारैराराध्य नमस्कुर्य्यात्। ततः स्वशिरसि श्रीं श्रां स्त्रीं क्रीं स्वाहा इत्येकादशधा जप्त्वा प्रतिष्ठाप्य कृताञ्जलिः।

पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥

इति मातृकां ध्यात्वा। मातृकान्यासं कुर्य्यात्। अं नमो ललाटे। आं नमो मुखे। इं नमो दक्षिणचक्षुषि। ईं नमो वामचक्षुषि। उं नमो दक्षकर्णे। ऊं नमो वामकर्णे। ऋं नमो दक्षनसि। ॠं नमो वामनसि। ऌं नमो दक्षगण्डे। ॡं नमो वामगण्डे। एं नमो ओष्ठे। ऐं नमो अधरे। ओं नमो ऊर्द्ध्वदन्ते। औं नमो अधोदन्ते। अं नमो ब्रह्मरन्ध्रे। अः नमो मुखे। कं नमो दक्षबाहुमूले। खं नमः कूर्परे। गं नमः कवचे। घं नमोऽङ्गुलिमूले। ङं नमोऽङ्गुल्यग्रे। तथा दक्षहस्तेन च छं जं झं ञं वामबाहुमूलचतुःसन्धिषु।

टं ठं डं ढं णं दक्षपादमूलचतुःसन्ध्यग्रेषु तं थं दं धं नं वामपादमूलचतुःसन्ध्यग्रेषु। पं नमो दक्षपार्श्वे। फं नमो वामपार्श्वे। वं नमः पृष्ठे। भं नमो नाभौ। मं नम उदरे। यं नमो हृदये। रं नमो दक्षस्कन्धे। लं नमः ककुदि। वं नमो वामस्कन्धे। शं नमो हृदादिदक्षकरे। षं नमो हृदादिवामकरे। सं नमो हृदादि दक्षपादे। हं नमो हृदादि वामपादे। ळं नमो हृदादि उदरे। क्षं नमो हृदादि मुखे।

ललाटे मुखवृत्ते च चक्षुषोः कर्णयोर्नसोः।
गण्डयोरोष्ठयोर्वापि दन्तपंक्त्योर्विशेषतः॥
ब्रह्मरन्ध्रे पुनर्वक्त्रे अकारादीन् न्यसेद् बुधः।
तर्जनीमध्यमायोगं अकारं विन्यसेद् बुधः।
मध्यमानामिकायोगात् मध्ये वक्त्रे न्यसेत् ततः।
मध्यमाङ्गुष्ठयोगेन विन्यसेच्चक्षुषोस्तथा।
अनामाङ्गुष्ठयोगेन कर्णयोर्न्यसनीयकम्।
तर्जन्यङ्गुष्ठयोगेन नासायोगे परिन्यसेत्।
अनामामध्यमायोगाद् गण्डयोर्विन्यसेत् सदा॥
अङ्गुष्ठपर्वणा न्यासः कर्त्तव्यश्चोष्ठयोरपि।
मध्यमाग्रं समादाय दन्तयोर्न्यसनीयकम्।
अङ्गुष्ठाग्रं ब्रह्मरन्ध्रे मुखे करतलं विदुः।
विद्यामुद्रां समादाय हस्तयोः साधकोत्तमः॥
विन्यसेद्धस्तपादेषु पार्श्वे पृष्ठे च नाभितः।
हृदाकारं तलं प्रोक्तं मातृकान्यासकर्मणि॥
ककुदि स्कन्धयोर्वापि पुनः सर्वत्र हस्तयोः।
ततो मूलेन शिर आदि पादान्तं पादादि [illegible]
आदि हृदयान्तं हृदा[illegible] व्यापकं

अं कं खं गं घं ङं आं हृदयाय नमः। इं चं छं जं झं ञं ईं शिरसे स्वाहा। उं टं ठं डं ढं णं ऊं शिखायै वषट्। एं तं थं दं धं नं ऐं कवचाय हुं। ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्। अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलपृष्ठाभ्याम् अस्त्राय फट्। अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः। इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं। ओं प फ बं भं मं औं कनिष्ठाभ्यां वौषट्। अं य रं लं वं शं षं सं हं ळं क्षं अः करतलपृष्ठाभ्यां अस्त्राय फट्।

योनिद्वादशविद्यास्तु विन्यसेत् साधकोत्तमः।
मूर्ध्नि वक्त्रे तथा कण्ठे हृदये चोदरे तथा॥
नाभावाधारपद्मे च पदोर्बाह्वोश्च सर्वतः।
योनिवेद्या योनिनित्या योनिरूपा तथैव च॥
योनिमध्या योनिसिद्धा योनिक्षुप्ता च योनिदा।
योनिज्ञा योनिसाध्या च योनिज्ञाना च योनिपा॥
योनिपुष्पा तथान्याश्चतुर्वर्गस्य सिद्धये॥

मृगमुद्रया मूर्ध्नि श्रीं योनिवेद्यायै नमः। वक्त्रे श्रीं योनिनित्यायै नमः। कण्ठे श्रीं योनिरूपायै नमः। हृदये श्रीं योनिमध्यायै नमः। उदरे श्रीं योनिसिद्धायै नमः। नाभौ श्रीं योनिक्षुप्तायै नमः। मूलाधारे श्रीं योनिदायै नमः। दक्षपादे श्रीं योनिज्ञायै नमः। वामपादे श्रीं योनिसाध्यायै नमः। दक्षबाहौ श्रीं योनिज्ञानायै नमः। वामबाहौ श्रीं योनिपायै नमः। सर्वाङ्गे श्रीं योनिपुष्पायै नमः। इति विन्यसेत्। इति द्वादशयोनिन्यासः।

दक्षहस्ताङ्गुष्ठेन दक्षनासापुटं धृत्वा मूलं षोडशवारं जप्त्वा वायुं पूरयेत्। ततो नासापुटौ धृत्वा चतुःषष्टिवारजपेन

कुम्भयित्वा वामनासायां कनिष्ठानामिकाभ्यां धृत्वा द्वात्रिंशद्वारजपेन दक्षिणेन रेचयेत्। पुनर्दक्षिणेनापूर्य वामेन रेचयेत्।

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्।
प्राणायामः स विज्ञेयः पूरकुम्भकरेचकैः॥
इत्थमेव वारत्रयं कुर्यादिति प्राणायामः।

शिरसि श्रीं अक्षोभ्य ऋषये नमः। मुखे श्रीं बृहस्पतिच्छन्दसे नमः। हृदि श्रीमत्तारायै एकजटायै देव्यै नमः। मूलाधारे हुं बीजाय नमः। पादयोः फट् शक्तये नमः। सर्वाङ्गे निजबीजकीलकाय नमः। इति ऋष्यादि न्यासः।

पीठन्यासं ततः कृत्वा पीठशक्तिं न्यसेत्ततः।
तत्तन्यासं विधायाथ बीजन्यासं समाचरेत्॥
कराङ्गञ्च षड़ङ्गञ्च न्यस्वा वर्णान्यसेत्ततः।
संशोध्य यन्त्रं देहे तु पीठपूजां समाचरेत्॥
गणेशं वटुकञ्चैव क्षेत्रपालञ्च योगिनीम्।
पीठपूजां ततः कृत्वा पीठशक्तिं प्रपूजयेत्॥
षोढ़ां कृत्वा ततो मन्त्री अर्घ्यं कृत्वा च तत् पुनः।
व्यापकं पञ्चधा कृत्वा पूजयेत् परदेवताम्।

हृदि हस्तं दत्त्वा मृगमुद्रया हृत्पद्मस्य केशरेषु श्रीं श्मशानाय नमः। श्रीं कल्पवृक्षाय नमः। श्रीं मणिपीठाय मनः। श्रीं नानालङ्कारेभ्यो नमः। श्रीं मुनिभ्यो नमः। श्रीं देवेभ्यो नमः। श्रीं बहुमांसास्थिमोदमानशिवाभ्यो नमः। चतुर्दिक्षु श्रीं शवमुण्डचिताङ्गारास्थिभ्यो नमः। इति पीठन्यासः।

हृदि श्रीं लक्ष्मीः नमः, श्रीं सरस्वत्यै नमः, श्रीं प्रीत्यै नमः, श्रीं कीर्त्यै नमः, श्रीं शान्त्यै नमः, तुष्ट्यै नमः, श्रीं पुष्ट्यै नमः, इति पीठशक्तिन्यासः।

ॐ आत्मतत्त्वाय स्वाहा इति आधारादि हृत्पर्य्यन्तम्। ॐ विद्यातत्त्वाय स्वाहा इति हृदादि मुखपर्य्यन्तम्। ॐ शिवतत्त्वाय स्वाहा इति मुखादि ब्रह्मरन्ध्रान्तम्। इति तत्त्वन्यासः।

मन्त्रं पञ्चखण्डं कृत्वा ब्रह्मरन्ध्रात् ललाटान्तम्। आद्यबीजं न्यसेत्। ललाटात् मुखान्तं द्वितीयबीजं नमः। मुखात् कण्ठं तृतीयबीजं नमः। कण्ठात् हृदयान्तं चतुर्थवर्णं नमः। हृदयान्मुखान्तं पञ्चमवर्णं नमः। इति बीजन्यासः।

हकारं रेफसंयुक्तं षड्दीर्घेण समन्वितम्।
चन्द्रखण्डयुतं कृत्वा विन्यसेत् साधकोत्तमः॥
एकजटा तारिणी च न्यस्या वज्रोदका तथा।
उग्रजटा ततो न्यस्या महाप्रतिसरा तथा॥
पिङ्गोग्रैकजटा पश्चात् कराङ्गेषु षडङ्गतः॥

तथा ह्रां एकजटायै अङ्गुष्ठाभ्यां नमः। ह्रीं तारिण्यै तर्जनीभ्यां स्वाहा। ह्रूं वज्रोदके मध्यमाभ्यां वषट्। ह्रैं उग्रजटे अनामिकाभ्यां हुं। ह्रौं महाप्रतिसरे कनिष्ठाभ्यां वौषट्। ह्रः पिङ्गोग्रैकजटे करतलपृष्ठाभ्याम् अस्त्राय फट्। इति कराङ्गन्यासः।

ह्रां एकजटायै हृदयाय नमः। ह्रीं तारिण्यै शिरसे स्वाहा। ह्रूं वज्रोदके शिखायै वषट्। ह्रैं उग्रजटे कवचाय हुं। ह्रौं महाप्रतिसरे नेत्रत्रयाय वौषट्। ह्रः पिङ्गोग्रैकजटे करतलपृष्ठाभ्याम् अस्त्राय फट्। इति षडङ्गन्यासः।

अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं नमो हृदि। एं ऐं ओं औं कं खं गं घं नमो दक्षबाहौ। ङं चं छं जं झं ञं टं ठं डं ढं नमो वामबाहौ। णं तं थं दं धं नं पं फं बं भं नमो दक्षपादे। मं यं रं लं वं शं षं सं हं लं क्षं नमो वामपादे। ततः श्रीमदेकजटायन्त्रम् उद्धृत्य समर्च्चयेत्। ॐ आः सुरेखे

मध्यरेखे हुं फट् नमः। इति योनिमुद्रां प्रदर्श्य यन्त्रं शोधयेत्। ततः पूजामारभेत्। पूर्वादितः श्रीं ह्रीं गां गणपतये नमः। दक्षिणे श्रीं ह्रीं वां वटुकाय नमः। पश्चिमे श्रीं ह्रीं चें क्षेत्रपालाय नमः। उत्तरे श्रीं ह्रीं यां योगिनीभ्यो नमः। पीठन्यासवत् पीठपूजां कृत्वा पूर्वाद्यष्टदले पीठशक्तिं संपूज्य मध्ये ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः। ततः स्ववामे विन्दुमध्यत्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा तत्र श्रीमदेकजटादेव्याः अर्घ्यस्थानाय नमः। तत्र त्रिपदिकामावाह्य जलेनाभ्युक्ष्य फड़िति पात्रं प्रक्षाल्य तत्र संस्थाप्य श्रीमदेकजटादेव्याः श्रीं अर्घ्यपात्राय नमः। ततो मूलेनापूर्य रक्तचन्दनविल्वपत्रदूर्वाक्षतादीन्निक्षिप्य विलोममातृकावर्णैर्मूलेन च विन्दुस्रुतसुधामयजलेन गङ्गमापूर्य तत्र गङ्गेचेत्यादिना अङ्कुशमुद्रया अर्घ्यमावाह्य वं इति धेनुमुद्रया अमृतीकृत्य योनिमुद्रां प्रदर्श्य मत्स्यमुद्रया आच्छाद्य तत्र देवीं ध्यात्वा पुष्पाञ्जलिं दत्त्वा षड़ङ्गानि विन्यस्य मूलं तत्र दशधा जप्त्वा तज्जलैः पुष्पादिना आत्मानं पूजोपकरणं चाभ्युक्ष्य पश्चार्घ्यं कृत्वा पञ्चधा व्यापकं कृत्वा देवीं ध्यायेत्।

ध्यायेत् श्रीतारकादेवीं कच्छपमुद्रया।
विशेषतः फलार्थी च ध्यायेत् तां योनिमुद्रया॥
प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासा परा।
खड्गेन्दीवरकर्त्रिखर्परभुजा हुंकारबीजोद्भवा॥
खर्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्॥

इति ध्यात्वा यन्त्रे तत् पुष्पं दत्त्वा ध्यानरहस्यं विभाव्य आवाहयेत्।

यथा सर्वामभिनवजलधरनीलां लम्बोदरीं व्याघ्रचर्मावृत-

शोभितकटीम् पीनोन्नतपयोधरा रक्तवर्त्तुलनेत्रत्रया पृष्ठेऽति नीलजटाजूटा शीर्षेऽक्षोभ्यमहादेवकृतनागफणातिशोभिता पार्श्वद्वये लम्बमाननीलोत्पलमाला पञ्चमुद्रास्वरूपशुभ्रत्रिकोणाकारकपालपञ्चतमाम् अतिनीलजटाजूटा विस्तीर्णचमरिकाकेश इव महाविगलितचिकुरा शुभ्रवर्णतक्षकनागकृतकङ्कणा रक्तवर्ण नागकृतस्वल्पहारा चित्रितवर्णशेषनागकृतहारा स्वर्णवर्णस्वल्पनागपादाङ्गुरीयकाम् इषद्रक्तनागकृतकटिसूत्रा दूर्वादलश्यामल नागकृतवलया चन्द्रसूर्य्यवह्निकृतनेत्रत्रया कोटिकोटिकालरविच्छविकृतदक्षिणनेत्रा कोटिकोटिबालचन्द्रकृतवामनेत्रा लक्षलक्षदहनकृतोर्द्ध्वनेत्रा लम्बोदरा महाकालशवरूप हृदयस्थितसङ्कुचितदक्षिणचरणा शवपादद्वयस्थितप्रसारितवामचरणाम् एतेन प्रत्यालीढपदा सद्यश्छिन्न गलद्रुधिरान्योन्यकेशग्रथितमुण्डमालावलीरम्या सर्वस्त्र्यलङ्कार शोभिता महामाहविमोहिनी महामोक्षविदायिका विपरीत रतासक्ता रत्यावेशस्मेराननाम्। दक्षिणहस्ताधोधृतकर्त्तिका तदूर्द्ध्वे लक्षचन्द्रहासखड्गधरा वामोर्द्ध्वे सर्वशिष्याणां भयहरणाय आसवगलितनीलोत्पलकिञ्चिद्विकसत्वररक्तनागधरा तदध कपालचषकसद्यःकृत्तमुण्डशोभितभुजा हुङ्कारवीजोद्भवा सर्वब्रह्माण्डाना कर्त्री क्षपयत्री षोडशाब्दा सर्वज्ञानविदायिनी ध्यात्वा आवाहयेत्।

श्रीं देवेशि। भक्तिसुलभ। परिवारसमन्विते।।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव॥

इत्युक्त्वा ऊर्द्ध्वाञ्जलिना आमदकजटे। देवि। इहागच्छागच्छ अधोमुखाञ्जलिना इह तिष्ठ तिष्ठ गर्भाङ्गुष्ठमुष्टिभ्याम् इह सन्निधेहि सन्निधेहि तदधोमुखेन इह सन्निरुद्धस्वहस्तं भ्रामयित्वा अत्र अधिष्ठानं कुरु मम पूजां गृहाण॥

आकारं विन्दुसंयुक्तं मायापाशविभूषितम्।
वह्निजाया च हंसान्तः प्रतिष्ठामन्त्र ईरितः॥

आं ह्रीं क्रों स्वाहा हंसः श्रीमदेकजटादेवतायाः प्राणा इह प्राणाः एवं जीव इह स्थितः एवं सर्वेन्द्रियाणि इह स्थितानि एवं वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इत्यनामाङ्गुष्ठसंयुक्ताग्रेण प्रतिष्ठापयेत्। ततो मूलं दशधा जप्त्वा धेनुयोनिमत्स्याङ्कुशग्रहखड्गमृगगालिनीमुद्राः प्रदर्श्य श्रीमदेकजटे! देवि! वज्रपुष्पं प्रतीच्छ हुं फट् स्वाहा। इति पुष्पाञ्जलीन् दत्त्वा पूजयेत्।

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमनं स्नानं वसनाभरणानि च।
सुगन्धि कुसुमं धूपदीपनैवेद्यवन्दनम्।

दशोपचारैर्वा पञ्चोपचारैर्वा पूजयेत्। पुरुषधिया सोऽहमिति मत्वा श्रीं वज्रपुष्पं प्रतीच्छ हुं फट् स्वाहा इत्युच्चार्य पूजयेत्। एतत् पाद्यं नमः पाद्यं गृहीत्वा तदुपरि पूजामन्त्रम् एकजटादेवतायै एतत् पाद्यं नमः। इति कृतमुष्टिप्रसारिताङ्गुष्ठतर्जनीभ्यां दद्यात्। तथा इदमर्घ्यं स्वाहा।

पाद्यञ्च पादयोर्दद्यात् मौलौ चार्घ्यं निवेदयेत्।
गन्धं भाले तथा पुष्पं पादयोश्च निवेदयेत्॥

इदं स्नानीयं स्वधा। मृगमुद्रया गन्धोऽयं नमः। अञ्जलिना पुष्पाणि वौषट्। ततः सव्यामे घण्टां चानीय गन्धपुष्पाभ्यां श्रीं जयध्वनिमन्त्रमातः स्वाहा इति घण्टां सपूज्य धूपं पात्रोपरि संस्थाप्य पूजामन्त्रं जप्त्वा वामहस्ते धृत्वा एष धूपः स्वधा। इति निवेद्य मृगमुद्रायां नीत्वा वामहस्तेन घण्टां वादयन् आनासामुखतो धूपसमीरणं प्रापयेत्। तथा दीपोऽयं स्वाहा। दृष्टिपर्यन्तं दीपं दत्त्वा नीराजयेत्।

आतानन्दनाथान् तथा महाकालरुद्राण्यम्ब उग्राम्ब-भीमाम्ब-घोराम्ब-भ्रामर्य्यम्ब-कालरात्राम्ब-विश्वरूपाम्बाः। ततः पूर्वादि वामावर्त्तेनाष्टदले पूजयेत्। ओं विरोचन वज्रपुष्पं प्रतीच्छ हुं फट् स्वाहा। एवं शङ्खपाण्डर पद्मनाभ अमिताङ्गनामक पाण्डर तारक पद्मान्तक वज्रपुष्पं प्रतीच्छ हुं फट् स्वाहा इति पूर्वद्वारे। तथा उदोच्यां यमान्तकप्रज्ञान्तकविघ्नान्तक-दक्षिणे नरान्तक एतान् संपूज्य पञ्चपुष्पाञ्जलीन् दत्त्वा पाद्यार्घ्यादिना देवीं संपूज्य वामे त्रिकोणं षट्कोणं वृत्तं चतुरस्रं विलिख्य तत्र विभरितमाधारपात्रं समांसतण्डुल-दधिहरिद्रादग्धमीनामवपिष्टकलवणार्द्रकान्यमनं गृहीत्वा दक्षहस्ते जलं नीत्वा ओं ह्रीं श्रीमदेकजटे देवि मयोपनीतं बलिं गृह्ण गृह्ण गृह्णापय गृह्णापय मम शान्तिं कुरु कुरु परविद्यामाक्रम्याक्रम्य त्रुट त्रुट छिन्धि छिन्धि भिन्धि भिन्धि सर्वजगद्वशमानय ओं ह्रीं स्वाहा इति त्रिः पठित्वा बलिं दद्यात्।

यदुक्तं कालिकाकल्पे बलिं स्वतनुशोणितम्।
तत् सर्वं कालिकार्चायां न ताराविषये क्वचित्॥
स्वगात्ररुधिरं यत्तु तारकायै प्रदीयते।
तस्य रुष्टा सदा तारा न पूजाफलमाप्नुयात्॥
त्रिकोणषट्कोणस्य वृत्तं कोणचतुष्टयम्।
बलिदाने लिखेदं स्थानं शस्यते तारकार्चने॥
ओं ह्रीं एकजटेत्युक्त्वा देवीति तदनन्तरम्।
महायक्षाधिपतये मयोपनीतक पदम्॥
बलिश्चोक्त्वा गृह्ण युग्मं श्रावयेत्तदनन्तरम्।
गृह्णापय पदद्वन्द्वं मम शान्तिं समाचरेत्॥
कुरुद्वयं परविद्यामाक्रम्याक्रम्य एव च।

त्रुटयुग्मं वदेत् पश्चात् छिन्धियुग्मं ततः परम् ।
भिन्धियुग्मं समुच्चार्य्य जगत् सर्वं वशं नय ।
वह्नितारं समुच्चार्य्य बलिं दद्यात् पठेत्त्वयम् ।

ततः पुनरर्घ्यं कृत्वा श्रीं ह्रीं ऐं श्रीमदेकजटे देवि मम दैविध्यां सिद्धय सिद्धय गृहाणार्घ्यं सर्वसाधकसहितं देहि हा । इत्युक्त्वा जय जय इत्युक्त्वा नीराजनपुरःसरं देव्या मौलौ दत्वा यथाशक्ति जप्त्वा समर्प्य जलं देव्या वामहस्ते दद्यात् ॥
ततस्तत्कवचादिपाठः सर्वत्र कुलक्रियादिपूर्वकः ॥

ततः प्रदक्षिणं कुर्य्यात् घण्टावाद्यपुरःसरम् ।
ऊर्द्धं दक्षिणकं हस्तं कृत्वा वामयं नरः ॥
याम्याञ्च वायव्यां गच्छेत् स्थित्वा किञ्चिच्च शाङ्करीम् ।
पुनर्याम्यं प्रगत्वा तु प्रणमेच्च पुरःस्थितः ॥
प्रणमेत् सप्तवारन्तु त्रिः प्रकुर्य्यात् प्रदक्षिणम् ।
दण्डाकारं निपत्याथ करौ कृत्वौ भूमिमध्यतः ॥
अङ्गुलानाञ्च पञ्चाणि पक्कोशत्य सुमानसः ।
त्रिकोणाकारमाधाय किञ्चिद्वामांशतो नमेत् ॥
उरसा शिरसा पश्चात् पाणिभ्यां जानुतस्तथा ।
नासाचिबुककर्णैश्च प्रणम्य सिद्धिमाप्नुयात् ।

अथ जपक्रमः ।

कुल्लुकां प्रजपेच्छीर्षे दशधा मन्त्रसिद्धये ।
मुखे सेतुं सप्तधा च प्रणवेन पुटं हृदि ॥
प्राणायामपरः पूर्वं जपेत् साधकसत्तमः ।

कुल्लुका यथा

स्त्रं द्वितीयं चन्द्राढ्यं प्रथमा चाङ्कुश एव च ।

श्रीं ह्रीं क्रौं इति शिरसि दशधा जपेत् । मुखे सेतुं ॐ इति सप्तधा जपेत् । हृदि प्रणवपुटितमन्त्रं सप्तधा जपेत् ।

सर्वत्र आदौ प्राणायामः। ततः सेतुं ततो महासेतुं ततो मन्त्रशिखाम् ॐ ह्रीं ऐं इति सप्तधा जपेत्। ततो मन्त्रप्राणं कखरीं इति सप्तधा। ततः सहस्रम् अष्टोत्तरशतं विंशतिं वा जपेत्। ततो जलपुष्पं करतले नीत्वा

ओं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि ! त्वत्प्रसादात्त्वयि स्थिते ॥

इति जपं देव्या वामहस्ते समर्पयेत्। ततः प्राणायामः। इति जपक्रमः। काम्यजपः पुरश्चरणप्रकरणे वक्तव्यः। नित्यजपे निगमम् अस्या एव।

सहस्रं प्रजपेन्मन्त्रं धर्ममोक्षार्थसिद्धये।
अष्टोत्तरशतं यत्तु तत्पूजायाः फलाप्तये ॥
विंशतिश्च जपेन्मन्त्रं पूजासिद्ध्यर्थमेव हि।

पूजनेतरजपे तारामारे।

यावन्न क्रियते कर्म पुरश्चरणमुत्तमम्।
तावदेव प्रजप्तव्यं सहस्रादधिकं शिव ॥
प्रजपेत् साधको यस्तु चोभययुक्तोऽप्यनन्यधीः।
सहस्रादधिकं वत्स ! सहस्रेषु समर्पयेत् ॥

एतेन पुरश्चरणहीनः सहस्रादूर्द्धं न जपेत्। यद्येकदा अयुतं जपेत् तदा सहस्र सहस्र जप्त्वा समर्पयेत्।

सहस्रं प्रजपेन्मन्त्रं पुरश्चरणकर्मणि।
शतं तेन प्रजप्तव्यं ह्यधिकं न कदाचन ॥

ततोऽर्घ्यजलं नीत्वा ओं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु मदीयं सकलं सम्यक् श्रीमदेकजटादेवतायै सर्वं समर्पितमस्तु।

ततः संहारमुद्रया क्षमस्वेति विसृज्य ऐशान्यां त्रिकोणे
ओं उच्छिष्टचाण्डालिन्यै नमः। ततस्तेन यन्त्रलेपनचन्दनेन
टीकापादादिकं नैवेद्यं किञ्चित् स्वीकृत्यान्यच्छक्तिभ्यो दत्त्वा
यथेच्छं विहरेदिति एकजटापूजापद्धतिः।

प्रत्यालीढ़पदां देवीं महामायां त्रिलोचनाम्।
सर्वालङ्कारभूषाढ्यां महानीलप्रभां पराम्॥
खड्गं पाशं दक्षिणे च वामेन्दीवरमूर्द्ध्वतः।
दधतं चसकं देव्या भावयेत् साधकोत्तमः॥

इति ध्यात्वा तत्कल्पोक्तयन्त्रे पूजयेत्॥ इति तारापूजा।

अथ कामतारापूजनम्। तत्कल्पोक्तयन्त्रे।

घोरहास्यां महादेवीं तारिणीं ताररूपिणीम्।
चसकेन्दीवरञ्चैव खड्गञ्चापि वरं तथा॥
व्याघ्रचर्मपरीधानां सर्वालङ्कारभूषिताम्।
बिभ्रतीं नागहाराञ्च महायोगस्वरूपिणीम्॥

इति ध्यात्वा आवाह्य पूर्ववत् सर्वम्। इति कामतारा-
पूजनम्।

उग्रताराप्रकरणोक्तयन्त्रे या या लक्ष्म्यादिपीठशक्तयः।
अत्र ताः सान्ति किन्तु,

इच्छाज्ञानक्रियाञ्चापि कामिनीं कामदायिनीम्।
रतिं रतिप्रियाञ्चैव रतिदां परिपूजयेत्॥
शवोपरि महादेवीं शवेशहास्यसंयुताम्।
विपरीतरताशक्तामुग्रतारां परात्पराम्॥
कर्त्रिं काण्डसंयुक्तां दक्षिणे तारिणीं पराम्।
वामभागे नीलपद्मं चसकं तदधः स्मृतम्॥
मुण्डमालावलीरम्यां रक्तधाराविभूषिताम्।
घोरहास्यां त्रिनेत्राञ्च सर्वदा ज्ञानदायिनीम्॥

एकवेणीं महावेणीं फणिराजविभूषिताम्।
सुवर्णमुकुटैर्युक्तां शुभ्रदन्तविभूषिताम्॥

इति ध्यात्वा पूर्ववत्। इति उग्रतारापूजनम्।

शम्भुपत्नीमहाकालप्रियाणाम् प्राणायामः वेदकलावर्ण-मन्त्रयुतः। इयान् विशेषः।—

नीलवाणीं सदा वन्दे नीलाञ्जनचयप्रभाम्।
स्थूलहारसमोपेतां व्याघ्रचर्मावृतां कटौ॥
नागेनावेष्टितां देवीं फणिहारविधारिणीम्।
फणिमस्तकयोगेन दक्षपादं प्रपञ्चितम्।
वामपादं शवे नाभौ रत्नन्नासद्वदान्विताम्॥
तामसीं महतीं विश्वमोहिनीं घोरकामिनीम्।
शिववक्षस्थ भ्रमरीं प्रत्यालीढपदां शुभाम्॥
चमरीकेशसंस्कारसदागलितकुन्तलाम्।
नानामणियुतां शौर्ये महापापविनाशिनीम्॥
कपालञ्चापि खड्गञ्च नीलपद्मं सरस्वतीम्।
भावयेत् सर्वसिद्ध्यर्थं नीलवाणीं कवित्वदाम्॥

एवं ध्यात्वा सर्वं पूर्ववत्। यन्त्रस्याष्टदिक्षु पद्मखड्गदण्ड-पाशकपालशूलगदापद्मचक्रादीन् पूजयेत्। इति विशेषः। इति पूजनं नीलसारदायाः महानीलसरस्वत्याः। ततो यथाशक्ति नित्यहोमः। तथा निगमे।

एकधा ह्याहुतिर्येन तारकायै प्रदीयते।
कोटिजन्मकृतं पापं तत्क्षणात् तस्य नश्यति॥

ततो बलिदानम्।

छागं वा महिषं वापि शूकरं वा पतत्त्रिणम्।
हस्तिनं मूषिकं वापि मार्जारञ्चापि मेषकम्॥
दत्त्वा देव्यै महादेव्यै स भवेत् कुलनायकः।

बलिं पुरत आनीय योनिमुद्रां प्रदर्श्य च ॥
दक्षिणे तर्पणं कृत्वा वामहस्ते नियोजयेत् ।
योमदेकजटे ! देवि ! बलिं गृह्ण सुरोत्तमे ! ।
मन्त्राणाञ्चापि मे सिद्धिं नतामिष्टिञ्च देहि मे ॥
ॐ ह्रीं श्रीं हुं ऐं ऐं सर्वसिद्धिप्रदे ! मे चतुर्वर्गसिद्धिं देहि देहि बलिं गृह्ण गृह्ण स्वाहा । इति निवेद्य खड्गं जलपुष्पादिना संपूज्य एकघातेन छेदयेत् । इति बलिदानम् ।
आसवं संविदाञ्चापि निवेद्यानन्दमाचरेत् ।
तदा पूजा प्रकर्त्तव्या ह्यन्यथा निष्फला भवेत् ॥
संविदां चतुर्धा विभज्य प्रथमे तत्त्वमुद्रया
ओं संविदे ! ब्रह्मसंभूते ! ब्रह्मपुत्रि ! सदानघे ! ।
भैरवाणाञ्च हृदये पवित्रा भव सर्वदा ॥
ॐ ब्राह्मौ नमः स्वाहा । इति भूमौ क्षिपेत् ।
ओं सिद्धिमूलकरे ! देवि ! हीनबोधप्रबोधिनि ! ।
राजप्रजावशकरि ! शत्रुकण्ठे त्रिशूलिनि ! ॥
ऐं भविद्यायै नमः ।
ओं नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ! ।
त्रैलोक्यविजये ! मातः ! समाधिफलदा भव ।
ह्रीं वैष्णव्यै नमः ।
ओं अज्ञानेन्धनदीप्ताग्ने ! ज्ञानाग्निब्रह्मरूपिणि ! ।
आनन्दस्याहुतिं प्रीतिं सम्यग् ज्ञानं प्रयच्छ मे ॥
क्लीं शूद्रायै नमः स्वाहा । ततस्तन्मध्ये त्रिकोणं विनिक्ष्य ओं अमृते ! अमृतोद्भवे ! अमृतवर्षिणि ! प्रिये ! अमृतमाकर्षय आकर्षय स्वाहा । ततस्तत्त्वमुद्रया पूर्ववत्तर्पयेत् ॥ ततो भूमौ क्षिप्त्वा विक्षिप्य ऐं ऐं वद वद वाग्वादिनि ! मम जिह्वायां स्थिरीभव सर्वसत्त्ववशं कुरु कुरु स्वाहा । इत्यनेन शुद्ध्यादिति ॥

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा सारदा
ताराख्यमनुस्मरन् प्रियतमं श्रीमाय्च,कारणम् ।
ब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे-
ऽप्याचारादिविधौ तृतीयपटलः सर्वार्थसिद्धिप्रदः ॥

---

## अथ चतुर्थः पटलः ।

### अथ षोढा ।

प्रणवं मातृकावर्णैः पुटितं मातृकास्थले ।
तेनैव पुटितं वर्णं न्यसेत्तत्रैव पार्वति ! ॥ इति यामले ।
केवलां मातृकां कृत्वा मातृकां तारसंपुटाम् ।
तारेण पुटितां तान्तु लज्जा तु मातृकापुटा ॥
लज्जया पुटिता सा तु न्यस्तव्या साधकोत्तमैः ।
मातृकया पुटा योषा योषया मातृका तथा ॥
मातृकया पुटं कूर्चं कूर्चेन पुटितार्णताम् ।
मातृकापुटितं चास्त्रं ह्यस्त्रं मातृकया तथा ।
मातृकापुटितं मन्त्रं मन्त्रेण पुटितान्तु ताम् ॥
षयुतं विन्यसेद् यस्तु वायुकुम्भकयोगतः ।
महायोगी भवेत् सोऽपि देवीं पश्यति चक्षुषा ॥
षोढाहीनस्य मन्त्रस्य दुर्बलत्वं प्रजायते ।
न सिद्धिदो भवेत् सोऽपि मोक्षदो न कदाचन ॥

षं तारं षं षों षं नमः । षों षं षों नमः । स्त्रीं षं
स्त्रीं षं नमः । स्त्रीं षं स्त्रीं नमः । षं ह्रीं षं नमः । ह्रीं
षं ह्रीं नमः । षं हूं षं नमः । हूं षं हूं नमः । षं फट् षं
नमः । फट् षं फट् नमः । षं मूलं षं नमः । मूलं षं मूलं
नमः । षं नमः षं लज्जा षं नमः लज्जा षं लज्जा नमः

श्रं बधूम् श्रं नमः श्रं कूर्चं श्रं नमः कूर्चं श्रं कूर्चं नमः। श्रं फट् श्रं नमः फट् श्रं फट् नमः श्रं मूलं श्रं नमः मूलं श्रं मूलं नमः इति वायुधारणेन न्यासं कृत्वा मूलेन सप्तधा व्यापकं कुर्य्यात्। इति गुह्यषोढा।

ह्रीं ऐं ह्रौं क्लीं हुं फट्

लज्जा वाग्भववीजञ्च प्रासादं काम एव च।
वर्मवीजं ततोऽस्त्रं स्यात्सिद्धिमवाप्नुयात्॥

इति महाषोढा।

धूं धूं धूमावति। स्वाहा इति मन्त्रं जपेद्बुधः।
वर्णन्यासक्रमेणैव मायया पुटिता बधू॥
बध्वा संपुटितान् वर्णान् विन्यसेत् साधकोत्तमः।
षड्धा न्यासं ततः कृत्वा महासिद्धिमवाप्नुयात्॥

इति पूर्ववत् पुटितं कृत्वा वर्णन्यासवत् पश्चायत् स्थाने षड्धा न्यसेत्। इति महाषोढा।

प्रत्यहं क्रियते येन षोढा वत्स। महामहा।
मन्त्रसिद्धिर्भवेत्तस्य स्वप्ने वाक्यं शृणोति हि॥

इति ब्रह्मानन्दपरमहंसपरिव्राजकावधूतविरचिते तारा-रहस्ये चतुर्थः पटले त्रिषोढाप्रकरणम्।

---

षोढा नत्वा मत्स्यमांसं परमाद्यादिभिर्युतम्।
सायंसन्ध्यां ततः कृत्वा योगं च परिकल्पयेत्।
आधारमूलं ग्रीवायां मेरुदण्डं प्रकीर्त्तितम्॥
तदाश्रित्य वसेत् लोके कोटितीर्थत्रयं शनैः।
वामे तदग्रे नाडी स्यात् ईडा सर्वार्थसिद्धिदा॥
दक्षिणे पिङ्गला नाडी सर्वतीर्थमयी शुभा।
सुषुम्ना मेरुपरतः पुण्यनाद्यखिलप्रदा॥

तन्मध्ये चित्रिणी यथा तन्मध्यमध्यतः स्मृता ।
ब्रह्मनाडी समाख्याता ब्रह्मानन्दप्रदायिनी ॥
इन्दीवरमृणालेव राजते मध्यमध्यतः ।
स्थिरवायुसमायोगात्तिष्ठत्येव चराचरम् ॥
स तावत् कुण्डलीशक्तिर्नासावायुः प्रकीर्त्तितः ।
मायायोगसमायोगात् तत्र चाष्टस्थितानि वै ॥
तिलकाकाररजतं तथा भाति च तिष्ठति ।
चैतन्यरहिता नाड्यो यदास्तिष्ठन्ति देहतः ॥
तीर्थं पुण्यं महापीठं सदाग्निस्त्य च तिष्ठति ।
यस्य च देवता तत्र मूले च परिनिष्ठिता ।
मेरोर्मूले यथा पद्मं मूलाधारं प्रकीर्त्तितम् ॥
चतुरङ्गुलविस्तीर्णम् उच्छ्रितं चतुरङ्गुलम् ।
चतुष्पर्णं शोणपर्णं त्रिकोणं कर्णिका ततः ॥
तन्मध्ये विन्दुरूपोऽहि काकिनीशक्तिसंयुता ।
स्वयम्भुलिङ्गमाख्यातं स्वर्णवर्णं सुशोभनम् ॥
यवपद्मकमानन्तु महालिङ्गं मनोहरम् ।
वेष्टयित्वा च विहरेत् शक्तिः कुण्डलिनी परा ॥
विलोलभुजगाकारा ब्रह्मरूपविधारिणी ।
मार्द्दत्रिवलयाकारा महायोगमयी सदा ॥
षट्पदेव प्रोच्यमाना नैव लिङ्गं स्पृशेत् क्वचित् ।
सूर्य्यकोटिप्रतीकाशा चन्द्रकोटिसुशीतला ॥
तडित्कमलरूपाभा परब्रह्मस्वरूपिणी ।
विराटमूर्त्तिर्देवेशो विहरेत् पूर्वतो दले ॥
चिलकाशक्तिसंयुक्तः स्तूयते च कृताञ्जलिः ।
महाकालो दक्षिणे च कालिकाशक्तिसंयुतः ।
स्तूयते परया भक्त्या महाज्ञानस्वरूपि

नारायणः पश्चिमे च महालक्ष्मीकुलेश्वरः ॥
स्तूयते परया भक्त्या भावेन कुण्डलीं पराम्।
उत्तरे च महादेवः पार्वत्या सह शङ्करः ॥
स्तूयते तारिणीं देवीं सर्पाकारां महेश्वरीम्।
यदा कदाचित् तदाचमिक वाक्यं शृणोति हि ॥
तदा सृष्टिं स्थितिञ्चापि संहारं कर्त्तुमेव हि।
ते मत्ताः स्युर्महादेव। साधु साधु प्रकाशितम् ॥
यदा लिङ्गे भवेल्लिप्ता तदा निद्रां व्रजेश्वरः।
यदा सा परमा शक्तिः स्थिरलग्ने स्थिरा भवेत् ॥
तदा पुण्यकरी लोके भविष्यति न संशयः।
यदा मूर्द्धनि लिङ्गस्य सा ददाति सुखं परम् ॥
जपयज्ञो भवेत् जीवस्तत्र शब्दे च सिद्धिदः।
यदा पुच्छं लिङ्गमूर्द्धि ददाति ब्रह्मरूपिणी ॥
गुरुतल्पं ब्रह्मयोषां गच्छेद्वालाञ्च कामिनीम्।
षड्दलं लिङ्गमूले च पद्मं स्याद्रक्तपाण्डरम् ॥
तन्मध्ये रक्तपाण्डुश्च लिङ्गं विश्वोद्भवात्मिकम्।
डाकिनीशक्तिसंयुक्तं सर्वसिद्धिप्रदायकम् ॥
ब्रह्मा विष्णुस्तथा रुद्रो भगवन्दः शचीपतिः।
राजते दलमध्ये तु सर्वशक्तिसमन्वितः ॥
स्तूयते परमं लिङ्गं सर्वकामार्थसिद्धिदम्।
मूलाधारात् कुण्डलिनीं तत्र यत्नेन चालयेत् ॥
तस्याः स्पर्शनमात्रेण दलं तस्योत्तरं सुखम्।
पद्मोपरि व्रजेचैव महायक्ती महेश्वरि। ॥
किन्तु तत्र स्थिताः सर्वे स्वर्गा गच्छन्ति तत्कृते।
एकत्रीभूय ते सर्वे स्तुवन्ति सिद्धिदायिनीम् ॥
नाभौ च षड्दलं पद्मं नवीनजलदप्रभम्।

विश्रान्तकस्तत्र लिङ्गं शाकिनीशक्तिसंयुतम् ॥
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुवेरस्तत्र ईशानः स्वस्वशक्तिसमन्वितः ॥
तत्र पद्मस्य मध्ये तु ब्रह्मनाडीसमाश्रिताम् ।
ज्ञात्वा तु तस्य पावाणि चोत्तरञ्च विभावयेत् ॥
ते ते देवास्ततो गत्वा स्तुवन्ति भक्तिसंयुताः ।
हृदये च ततो ध्यायेत् पद्मं षोड़शभिर्दलैः ॥
महाशुक्लं महापद्मं गजकुम्भाकृतिं दलम् ।
इन्द्रयन्द्रो गुरुः शुक्रो वामदेवः शिवापतिः ॥
ईश्वरः शङ्करः कृष्णः वामदेवः कुलेश्वरः ।
कमलानायकः कोपः कामरूपः कृपामयः ॥
करणे षोडशके च स्वस्वयोषासमन्वितः ।
स्तूयते सर्वदा भक्त्या महालिङ्गं महेश्वरम् ॥
डाकिनीशक्तिसंयुक्तं भावयेच्च परात्परम् ।
तत् पन्थानं समारुह्य तत्र देवीं समानयेत् ॥
तद्वामे राजते जीवस्तदधः पाप एव च ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
वज्रदन्तसमोपेतं मदुदन्तविभूषितम् ।
महाकायं महादेवरहितं हृदये सदा ॥
नखे स्वर्णहृतं चिह्नं सर्वदोपयुतं परम् ।
नशाकारं मोक्षहीनं कुलाचारविहीनकम् ॥
कामदं कामरूपेण रतिदोषप्रदं तथा ।
तत्र.पं भावयेच्च दशपत्रं सुशोभनम् ॥
नीलरक्त महापद्मं सर्वसिद्धिप्रदायकम् ।
महा[illegible]ं कामनाम राजते कामिनीयुतम् ॥
कामरं[illegible] मान्मथ कामाधारश्च कामुकः ।

कामिनीनायकः कामो ब्रह्मानन्दः कुलेश्वरः ॥
त्रिलोकेशः सदानन्दः कौलो दशदले स्थितः ।
स्वस्वशक्तिसमेताः स्तुवन्ति कुण्डलीं पराम् ॥
ललाटे नेत्रपत्रञ्च ब्रह्मलिङ्गसमन्वितम् ।
सशक्तिर्विष्णुरुद्रश्च स्तौति तारासमन्वितः ॥
तं विभिद्य गता देवी कुण्डली शक्तिरुत्तमा ।
अधोमुख सहस्रारं मेरुदण्डाग्रनाडीतः ॥
त्रिलोकस्थास्ततो देवाः सन्ति तत्रैव शक्तिभिः ।
नाडीत्रयसमोपेतं सरोजं द्वादशं दलम् ॥
त्रिकोणकर्णिका तत्र ब्रह्मविष्णुशिवान्विता ।
दन्तावोकवती शय्या शक्तिवज्रसमन्विता ॥
तत्रापि श्रीगुरुः साक्षात् सर्वभूतहिते रतः ।
कर्पूरधवलं देवं ब्रह्मरूपिणमव्ययम् ॥
परमं शिवमाख्यातं कौविराख्यं विभावयेत् ।
मूलादिदेवताः सर्वे स्तुवन्ति सर्वकारणम् ।
कुण्डलिनीं महाशक्तिं ललाटे कमलावतीम् ॥
भावयेत् शिवरूपेण वामभागे समानयन् ।
वामे रतिञ्च संस्थाप्य गुरोरेव सुसिद्धये ॥
समुत्थाय गुरुस्ताञ्च साकारां मन्त्ररूपिणीम् ।
तत्रापि गुरुणा देवि । वीतशक्ता महेश्वरी ॥
उपरि स्थीयते तेन महामोहविनाशिनी ।
वामपादाङ्गुष्ठतोऽस्याः वक्ष्यतेऽमृतमुत्तमम् ॥
तत् पीत्वा सुखद् खाभ्या जीवी जीवति नित्यशः ।
भावनाभ्यासयोगेन यदि नाडीं प्रवेशयेत् ।
महासिद्धिं स लभतेऽप्यमरो जायते ध्रुवम् ॥

इति तारायोगे योगसारः ।

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा सारदा
ताराराध्यमनुस्मरन् प्रियतमं चोमावच. कारणम् ।
ब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे
योगाचारविधौ चतुर्थपटल सर्वार्थसिद्धिप्रदः ॥

इति तारारहस्यतन्त्रं समाप्तम् ।

